क्तो लयः। अक्षरस्य 'तद्धाम परमं मम' इति वाक्योक्तभगवद्धामत्वज्ञानपूर्वकं नित्यभगवत्से- कत्वेन भगवदभिन्नत्वेन दहराद्युक्तरीत्योपासने यथाधिकारं सालोक्यादिचतुष्टयप्राप्तिः। आ- दित्याद्युपासनानामङ्गोपासनात्वादर्चिरादिक्रमेण गत्याऽजमानवेन पुरुषेण भगवल्लोकप्राप्तिरै- श्वर्यादिभोगश्च। उपासनायां मर्यादाभक्तिसाहित्ये वैकुण्ठादिलोकेषु भगवत्सेवकत्वमधिकम्। तदा भगवदनुभवः। तत्रापि भक्तेरुत्कटत्वे तु भगवच्चरणे कौस्तुभादौ वा प्रवेशेन भग- वत्सायुज्यम्। अनुग्रहविशेषेण पुष्टिभक्तौ तु 'भक्त्या मामभिजानाति' इत्युक्तरीत्या स्वस्मिन्प्रवेश्य भूमविद्योक्तरीत्या पुनः पृथगाविर्भाव्य भजनानन्दानुभावने 'सोऽश्नुत' इति श्रुत्युक्तरीतिकं भोगं कारयतीति'।

आचार्यकृपयैवायमध्यायार्थः प्रकाशितः। अतो विशेषजिज्ञासा प्रकाशेन प्रपूर्यताम्॥१॥
फलमालामलब्ध्वास्य रचितां पुरुषोत्तमैः। कृता गोपेश्वरेणेयं नातो व्यर्थः परिश्रमः॥२॥

**इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचिता- यामधिकरणमालायां चतुर्थाध्यायस्य चतुर्थः पादः॥**

